[५८]

[१]वामदेवो गौतम ऋषिः। अग्निर्देवता, सूर्यो वा आपो वा गावो वा घृतस्तुतिर्वा।
त्रिष्टुप् छन्दः, एकादशी जगती[१]।

समुद्रादूर्मिर्मधुमाँ उदारदुपांशुना सममृतत्वमानट्।
घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः॥ १॥

समुद्रात्। ऊर्मिः। मधुऽमान्। उत्। आरत्। उप। अंशुना। सम्। अमृतऽत्वम्। आनट्।
घृतस्य। नाम। गुह्यम्। यत्। अस्ति। जिह्वा। देवानाम्। अमृतस्य। नाभिः॥ १॥

वेङ्कट० [२]कात्यायनः—'समुद्रादेकादशाग्नेयं जगत्यन्तं सौर्यं वाऽऽपं वा† गव्यं वा घृतस्तुतिर्वा' (ऋअ २,४,५८) इति[२]। समुद्रात् कश्चन उदकवान् ऊर्मिः अग्निरादित्यो वा उत् आरत् उद्गात्। सोऽयम् ऊर्मिरात्मीयेन अंशुना मनुष्यान् अमृतत्वम् प्रापयति[३]। [४]तथाऽस्य क्षरणशीलस्य यत् गुह्यम् नाम‡ भवति तदहं कीर्तयामि। तदाह—[५]देवानाम् जिह्वा भवति। अग्नौ हि देवानां होमः आदित्ये वा अमृतत्वस्य च स्थाने भवतीति[४] ॥ १॥

वयं नाम प्र ब्रवामा घृतस्यास्मिन् यज्ञे धारयामा नमोभिः।
उप ब्रह्मा शृणवच्छस्यमानं चतुःशृङ्गोऽवमीद् गौर एतत्॥ २॥

वयम्। नाम। प्र। ब्रवाम। घृतस्य। अस्मिन्। यज्ञे। धारयाम।। नमःऽभिः।
उप। ब्रह्मा। शृणवत्। शस्यमानम्। चतुःऽशृङ्गः। अवमीत्। गौरः। एतत्॥ २॥

वेङ्कट० [५]जिह्वा देवानामितीदम् नाम वयम् अग्नेः प्र ब्रवाम, अस्मिन् यज्ञे धारयाम च तदग्निं नमोभिः। उप शृणोति महानग्निः उच्यमानं नाम। तदिदं नाम चतुःशृङ्गः कश्चन गौरः[५] वमति प्रकाशयति॥ २॥

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आ विवेश॥ ३॥

चत्वारि। शृङ्गा। त्रयः। अस्य। पादाः। द्वे इति। शीर्षे इति। सप्त। हस्तासः। अस्य।
त्रिधा। बद्धः। वृषभः। रोरवीति। महः। देवः। मर्त्यान्। आ। विवेश॥ ३॥

वेङ्कट० तस्य[६] गौरस्य चत्वारि शृङ्गाणि भवन्ति, त्रयः च पादाः, द्वे च शीर्षे, सप्त हस्तासः अस्य। स त्रायन् त्रिधा बद्धः वृषभः शब्दं करोति। सोऽयं [७]महान् देवः[७] मनुष्यान् आ विवेश

---

१-१. नास्ति मूको. २-२. नास्ति वि[१] अ[१]. † नास्ति वि[१] लपं. ३. प्रकाशयति वि[१] अपं. ४-४. नास्ति वि[१] लपं ‡ नास्ति ल. ५-५. नास्ति वि[१] अपं. ६. नास्ति वि[१] अ[१]. ७-७. महादेवं वि[१] अपं.

इति। अथाथर्वणिकम्—'चत्वारि शृङ्गा इति वेदा एवैत उक्ताः। त्रयो अस्य पादा इति सवनान्येव। द्वे शीर्षे इति ब्राह्मौदनप्रवर्ग्यौ एव। सप्त हस्तासो अस्येति छन्दांस्येव। त्रिधा बद्ध इति मन्त्रः कल्पो ब्राह्मणम्। वृषभो रोरवीतीत्येष ह वै वृषभ एव तद्रोरवीति यदेतेन शस्त्राणि शंसन्ति ऋग्भिर्यजुर्भिः सामभिर्ब्रह्मभिरिति। 'महो देवो' मर्त्यां आ विवेशेत्येष एव वै महान् देवो यद्यज्ञो मर्त्यानाविवेश इति' ( गो. ब्रा १३,७ ) ॥ ३ ॥

त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविन्दन् ।
इन्द्र एकं सूर्य एकं जजान वेनादेकं स्वधया निष्टतक्षुः ॥ ४ ॥

त्रिधा । हितम् । पणिऽभिः । गुह्यमानम् । गवि । देवासः । घृतम् । अनु । अविन्दन् ।
इन्द्रः । एकम् । सूर्यः । एकम् । जजान । वेनात् । एकम् । स्वधया । निः । ततक्षुः ॥ ४ ॥

**वेङ्कट०** त्रिधा हितम् पणिभिः अवगुह्यमानं कस्मिंश्चिद् गवि स्थितम् घृतम् उदकम् देवाः अनु अविन्दन्। तस्य घृतस्य एकम् अंशम् इन्द्रः जनयति, द्वितीयम् सूर्यः। अथ[2] अग्नेः[3] हविषा यजमानाः निः कृण्वन्ति। त्रयो देवा आकाशाद् वृष्टिमुत्पादयन्तीति समुदायार्थः ॥ ४ ॥

एता अर्षन्ति हृद्यात् समुद्राच्छतव्रजा रिपुणा नावचक्षे ।
घृतस्य धारा अभि चाकशीमि हिरण्ययो वेतसो मध्य आसाम् ॥ ५ ॥

एताः । अर्षन्ति । हृद्यात् । समुद्रात् । शतऽव्रजाः । रिपुणा । न । अवऽचक्षे ।
घृतस्य । धाराः । अभि । चाकशीमि । हिरण्ययः । वेतसः । मध्ये । आसाम् ॥ ५ ॥

**वेङ्कट०** एताः गच्छन्ति हृद्यात् अन्तरिक्षात् शतसङ्घाः केनचित् शत्रुणा न अवख्यातव्याः[4]। ता एताः घृतस्य धाराः अभि पश्यामि। तासाम् मध्ये हिरण्मयः कश्चित् वेतसः तिष्ठति इति वैद्युतमग्निमादित्यं वा आहेति ॥ ५ ॥

[5]इति तृतीयाष्टके अष्टमाध्याये दशमो वर्गः[5] ॥

सम्यक् स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः ।
एते अर्षन्त्यूर्मयो घृतस्य मृगा इव क्षिपणोरीषमाणाः ॥ ६ ॥

सम्यक् । स्रवन्ति । सरितः । न । धेनाः । अन्तः । हृदा । मनसा । पूयमानाः ।
एते । अर्षन्ति । ऊर्मयः । घृतस्य । मृगाःऽइव । क्षिपणोः । ईषमाणाः ॥ ६ ॥

**वेङ्कट०** समीचीनं समुद्रात् स्रवन्ति[6] नद्यः इव वाचः द्यावापृथिव्योः अन्तः अग्निना मनसा हृदयेन च

---

१-१. महादे' कर्त.   २. अथवा वि' कर्त.   ३. ॰ग्नो मूको.   ४. ॰ख्याताः वि' ख लर्त.
५-५. नास्ति मूको.   ६. द्रवन्ति वि' अ'.

पूयमानाः क्षार्यमाणाः[1] । प्रकारान्तरेणाह — एते गच्छन्ति ऊर्मयः घृतस्य[2] [3]शीघ्रम् मृगाः इव क्षेप्तुर्भयाद् भयात् पलायमानाः[3] ॥ ६ ॥

सिन्धोरिव प्राध्वने शूघनासो वातप्रमियः पतयन्ति यह्वाः ।
घृतस्य धारा अरुषो न वाजी काष्ठा भिन्दन्नूर्मिभिः पिन्वमानः ॥ ७ ॥

सिन्धोःऽइव । प्रऽअध्वने । शूघनासः । वातऽप्रमियः । पतयन्ति । यह्वाः ।
घृतस्य । धाराः । अरुषः । न । वाजी । काष्ठाः । भिन्दन् । ऊर्मिऽभिः । पिन्वमानः ॥ ७ ॥

वेङ्कट० नद्याः इव अध्वनः प्रारम्भे पतनदेशे शूघनासः शीघ्रं गन्त्र्यः[4] पृथिव्यां वातवेगेनेतस्ततः[5] प्रक्षिप्यमाणाः पतन्ति महत्यः घृतस्य धाराः । प्रेरयति[6] आरोचमानः इव अश्वः दिशो मेघैरधिष्ठिताः भिन्दन् अपाम् ऊर्मिभिः पिन्वमानः ॥ ७ ॥

अभि प्रवन्त समनेव योषाः कल्याण्यः स्मयमानासो अग्निम् ।
घृतस्य धाराः समिधो नसन्त ता जुषाणो हर्यति जातवेदाः ॥ ८ ॥

अभि । प्रवन्त । समनाऽइव । योषाः । कल्याण्यः । स्मयमानासः । अग्निम् ।
घृतस्य । धाराः । सम्ऽइधः । नसन्त । ताः । जुषाणः । हर्यति । जातऽवेदाः ॥ ८ ॥

वेङ्कट० यास्कः — 'अभिनमन्त[7] समनस इव योषाः । समनं[8] समननाद्वा संमाननाद्वा[9] कल्याण्यः स्मयमानासः । अग्निमित्यौपमिकम् । घृतस्य धारा उदकस्य धाराः समिधो नसन्त । [10]नसतिराप्नोतिकर्मा वा नमतिकर्मा वा । ता जुषाणो[10] हर्यति जातवेदाः । हर्यतिः [11]प्रेप्साकर्मा विहर्यतीति[11]' ( ७,१७ ) । अथमर्थः— अभि गच्छन्ति समनस्का इव स्त्रियः कल्याण्यः स्मयमानाः अग्निम् माध्यमिकम् घृतस्य[12] धाराः समिधः इव अग्निं । ताः प्रीयमाणः कामयते अग्निरिति ॥ ८ ॥

कन्या इव वहतुमेतवा उ अञ्ज्यञ्जाना अभि चाकशीमि ।
यत्र सोमः सूयते यत्र यज्ञो घृतस्य धारा अभि तत् पवन्ते ॥ ९ ॥

कन्याःऽइव । वहतुम् । एतवै । ऊँ इति । अञ्जि । अञ्जानाः । अभि । चाकशीमि ।
यत्र । सोमः । सूयते । यत्र । यज्ञः । घृतस्य । धाराः । अभि । तत् । पवन्ते ॥ ९ ॥

---

१. क्षेप्या॰ वि॰ अ॰ ह. २. 'तस्य धारा अभिपश्यामि' वि॰ कर्प. ३-३. नास्ति वि॰ कर्प. ४. गन्त्र्याः वि॰ कर्प; गन्त्र्यः वि॰ अ॰. ५. येतेत॰ वि॰ कर्प. ६. प्रेरयन्ति वि॰ ह कर्प. ७. 'नमन्ति मूको. ८. समन वि॰ कर्प; समना वि॰. ९. संमनन॰ वि॰ अ॰. १०-१०. 'नसतिरा···तिकर्मा वा ता जु॰ वि॰; 'पोतिकर्मा वा ता जु॰ अ॰. ११-११. 'कर्माविहर्य॰ वि॰ अ॰. १२. नास्ति वि॰ अ॰.

वेङ्कट० युवतीः[1] इव भर्तारम् एतु शरीरम् अलङ्कुर्वाणाः पवित्रं सरस्य धाराः अभि पश्यामि । यत्र सोमः सिच्यते, यत्र चान्यत् हविरग्नौ, यत्र घृतस्य धाराः अभि गच्छन्ति ॥ ९ ॥

अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त ।
इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत् पवन्ते ॥ १० ॥

अभि । अर्षत । सुऽस्तुतिम् । गव्यम् । आजिम् । अस्मासु । भद्रा । द्रविणानि । धत्त ।
इमम् । यज्ञम् । नयत । देवता । नः । घृतस्य । धाराः । मधुऽमत् । पवन्ते ॥ १० ॥

वेङ्कट० अभि गच्छत सुस्तोत्रं गोहितं[2] गमनशीलमाजिम् । अस्मासु च भजनीयानि धनानि धत्त । यथा इमम् यज्ञम् नयत देवतासु अस्माकम् । घृतस्य धाराः इमाः मधुयुक्तं क्षरन्ति । पादश्चतुर्थः परोक्ष इति ॥ १० ॥

धामन् ते विश्वं भुवनमधि श्रितमन्तः समुद्रे हृद्य१न्तरायुषि ।
अपामनीके समिथे य आभृतस्तमश्याम मधुमन्तं त ऊर्मिम् ॥ ११ ॥

धामन् । ते । विश्वम् । भुवनम् । अधि । श्रितम् । अन्तरिति । समुद्रे । हृदि । अन्तः । आयुषि ।
अपाम् । अनीके । सम्ऽइथे । यः । आऽभृतः । तम् । अश्याम । मधुऽमन्तम् । ते । ऊर्मिम् ॥ ११ ॥

वेङ्कट० हे अग्ने सूर्य! या तव तेजसि विश्वम् भूतजातम् अधि श्रितम् । स त्वम् अन्तरिक्षस्य अन्तः वर्तसे । तथा मनुष्ये च हृदि अन्तः वर्तसे । अपाम् मध्ये सङ्गते[3] यः आहवः, तम् मधुमन्तम् उदकसङ्घातं त्वत्तः वयं लभेमहि ॥ ११ ॥

[4]इति तृतीयाष्टके अष्टमाध्याये एकादशो वर्गः[4] ॥

प्रायच्छदभिप्रायमहमर्थं सूक्तमञ्जसा ।
शौनकोऽप्याह बहुधा वामदेवः प्रसीदतु ॥ इति ॥

—※—

इति ऋग्वेदे सभाष्ये चतुर्थं मण्डलं समाप्तम् ॥





१. युवतयः मूको. २. गहितं वि॰ अर्प. ३. सङ्गते वि॰ अ॰. ४-४. नास्ति मूको.

# शोधपत्रम्¹

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ११५३ | १७ | अथोऽपर...१०) | अथोऽपरिमितम् (तु. काठ २, ८, २, ६) |
| ११५७ | ६ | हविषान् | हविषा |
| ११५९ | १६ | देव !¹ | × × |
| ,, | १९ | दिंक्तुः | दिंक्षुः |
| ,, | २६ | १. नास्ति मूको. | × × |
| ११६१ | १५ | दास्वते | दास्वंते |
| ११६७ | ११ | ष्टुऽसन्तम् | ष्टुऽसन्तंम् |
| ११७२ | १४ | °होमा° | °होंमा° |
| ११७५ | ६ | वृर्धंवन्ति | वृर्धयन्ति |
| ११७८ | १३ | बलवत्तमम् । | । बलवत्तमम् |
| ११८२ | २१ | सवसौ° | सुवसौ° |
| ११९५ | १५ | धुनिइव¹ | × × |
| ,, | २५ | नास्ति वि¹ ल लपं | धुनिइव वि¹ क्ष¹ |
| ११९७ | ६ | । विद्रुत्तरः | विद्रुत्तरः । |
| ११९८ | ७ | शत_तो | शतक्रतो |
| १२०१ | २० | उतो | उतो |
| १२०२ | ३ | हरी | हरी |
| ,, | २० | पुंन्वा° | पुन्वा° |
| १२०३ | १८ | प्रहुत्वं¹ | प्रहुत्वं¹ |
| १२०४ | २० | अर्णः ऽवृतम् | अर्णःऽवृतम् |
| १२०५ | १२ | सौवश्व्यशत्रोः | सौवश्व्यस्य शत्रोः |
| १२१० | ३ | °रसोवाय | °रुभिषोवाय |
| १२१६ | १८ | अस्य | तस्य |
| १२१७ | १९ | अपहर्तुं माम् इव । | अपहर्तुम् । आ वि |
| ,, | ,, | तेभ्यः² | तेभ्यः² । |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२१९ | १ | प्रभृतिम् | प्रभृतिम् |
| ,, | ९ | वैरम् | वरंम् |
| ,, | १४ | षद्द्विवो | षद् द्विवो |
| १२२१ | १६ | बरन्तुः | बरन्तु |
| १२३१ | १० | सयवंसा | सुयवंसा |
| १२३३ | २४ | ते न | ते |
| १२३४ | ११ | अपो | अपो |
| १२३५ | २० | प्रियस्वं | प्रियस्वं |
| १२४० | १९ | शत्रून् | शत्रून् |
| १२४१ | २० | हर्षीऽवतः | हर्षीवतः |
| १२४२ | १६ | पतौ | पतो |
| १२४५ | २१ | अद्दे | अद्दे |
| १२४८ | १ | सुंख | सुखे |
| १२४८ | १ | विवोसयम् | विवासयम् |
| १२५२ | २ | °राधसः | °रांधसः |
| १२५६ | १ | गिरः | गिरः |
| १२५९ | १३ | समुच्छितं | समुच्छितं |
| १२६९ | २० | अरथेथेः | अरथेथे |
| १२७० | १० | रुच्यांऽव | रुच्यांऽइव |
| ,, | १५ | प्रभी | । प्रभी |
| १२७५ | २० | विऽचर्षणिः | विऽचर्षणिः |
| १२८१ | १८ | °मागढेति | °मागच्छेति |
| १२८३ | ३ | नद्यः । उद्° | नद्यः उद्° |
| ,, | ४ | °ते क्ष° | °ते । क्ष° |
| ,, | २२ | सुऽपत्नी इति सुपत्नी | सुपत्नी इति सुऽपत्नी |
| १२८४ | २३ | (?) | × × |
| १२८७ | १७ | सनु° | सूनु° |

१. × एतच्चिह्न-परामृष्टः पाठो नेयः ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२९६ | १८ | तनूनपात् | तनूनपात् |
| १२९७ | २० | °पे इति | °पे इति |
| १३०२ | १९ | °यम् अ° | °यम् । अ° |
| १३०५ | १७ | ऋतऽवरी | ऋतवरी |
| | | इत्युतवरी | इत्युतऽवरी |
| १३११ | १७ | वेरिति | वेरिति |
| १३२२ | ८ | देवा_ | देवासः |
| १३२३ | १ | हकारी | महकारी |
| ,, | १५ | साक° | साक° |
| १३३४ | १५ | वपो | तपो |
| ,, | १६ | अचि° | अचि° |
| ,, | २० | इष्मनोम | इष्मेनोम |
| १३३७ | १५ | अध्वरम् | अध्वरम् |
| १३३८ | ७ | स्वधाऽव: | स्वधाऽवः |
| १३४५ | १३ | इष्यसे | इष्यसे |
| १३४६ | ११ | अग्निः | अग्निः |
| १३५१ | १९ | प्रातः° | प्रातः° |
| १३५३ | ५ | °नुष्टमः | °सुष्टुभः |
| १३५४ | ७ | नाभाभौ | नाभौ |
| ,, | १२ | _सुतम् | असुतम् |
| १३५५ | २२ | गिरः | गिरः |
| १३५६ | ९ | तनूदेनपात् | तनूदऽनपात् |
| १३६० | ९ | ऋषि । इन्द्रोः दे° | ऋषिः । इन्द्रो दे° |
| १३६४ | २३ | दंहणे साधो!' | दंहणे' साधो! |
| १३६५ | १६ | कीवितः | कीवतः |
| १३६७ | १५ | °कमणो | °कर्मणो |
| १३७० | १३ | प्रत्नस्य | प्रत्नस्य |
| ,, | ११ | प्रपुष्य | प्रऽपुष्य |
| ,, | २२ | रुद्रेभिः | रुद्रेभिः |
| १३७९ | ३ | ऊवम् | ऊर्वम् |
| ,, | १४ | °ते इति | °ते इति |
| १३८० | २० | कि मच्छन् | किमिच्छन् |
| १३८३ | १७ | मर्त्रन् | मन्त्रन् |
| १३८७ | २० | स्व_ऽयुजो | स्वाऽयुजो |
| १३८८ | २० | समिन्द्र | समिन्द्र |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १३९० | ९ | प्रदिवो | प्रदिवो |
| १३९१ | १८ | अंशुः | अंशुः |
| १३९२ | ३ | सर्मी | सर्मी |
| १३९३ | १३ | °ऽक्तो | °ऽक्तो |
| १३९६ | ८ | समृते इति | समृते इति |
| १३९७ | १५ | वर्पितः | वर्पितुः |
| १३९७ | २३ | °पिम्यो | °पिन्वी |
| १३९९ | २२ | °रपहतासु | °रपहतासु |
| १४१२ | १३ | वज्रसशम् | वज्रसंशम् |
| १४१६ | ७ | शर्मन् | शर्मन् |
| १४१८ | १२ | उदगृणः | उदगूर्णः |
| १४१९ | ४ | शत्रणाम् | शत्रूणाम् |
| १४२२ | १५ | अभिमातिऽ° | अभिमातिऽ° |
| १४२६ | १४ | वृत्रहा | वृत्रहा |
| १४२९ | ८ | तन्वंम् | तन्वंम् |
| १४४१ | ७ | °रुर्वे १न्तरिक्षम् | °रुर्वे १न्तरिक्षम् |
| १४४३ | १६ | हविर्भिर्धा° | हविर्भिर्धा° |
| १४५२ | १६ | अवृजन् | अवृञ्जन् |
| १४५६ | २० | इमम् | इमम् |
| १४६८ | ६ | शमन् | शमून् |
| १४७६ | २० | घृतऽस्नू | घृतऽस्नूं |
| १४८० | १४ | ऋतमा° | ऋतमा° |
| १४८१ | २१ | पुरुऽवार | पुरुऽवार |
| १४८२ | ८ | कृणाध्वम् | कृणाध्वम् |
| १४९१ | १ | समतायां | ममताया |
| १४९७ | २२ | अनक्षेना | अनक्षेन |
| १५०५ | ११ | दर्मे | दर्मे |
| १५०८ | १५ | स्व१र्णे | स्व१र्णे |
| १५०९ | २४ | न्मूर्धन् | °न्मूर्धन् |
| १५१३ | २० | वर्ष्णो | वर्ष्णो |
| १५१९ | २२ | वपुः | वप्रः |
| १५२२ | ४ | वपः | वंपः |
| १५२६ | ९ | मदिष्ठाः | मदिष्ठाः |
| १५२८ | १४ | मघवा | मघवा |
| ,, | १५ | मघवा | मघवा |
| ,, | १६ | अक्षियन्तम् | अक्षियन्तम् |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| १५३८ | ८ | निन्द्रायाम् | निद्रायाम् |
| १५४२ | १७ | वृजमर्प° | वृजर्मप° |
| १५५२ | १५ | कृतस्तु | क्रतस्तु |
| १५५७ | २ | इन्द्र | इन्द्रं |
| १५६० | ४ | भरंद् | भरंत् |
| १५६४ | ४ | अर्दृत्वम् | अदर्दृत्वम् |
| १५७१ | २० | अंवन्तु | अंवन्तु |
| १५७५ | ५ | गिरश्च | गिरंश्च |
| १५८१ | १५ | ऋमवो | ऋभवो |
| १५८८ | १० | अभूत° | अमृत° |
| १५९२ | ३ | दानानिसन्ति | दानानि सन्ति |
| १५९६ | १८ | °च्छूंत्रु° | °च्छूंत्र° |
| १५९८ | १८ | द्विषमं° | द्विषुर्मं° |
| १५९९ | १६ | भर्मृती इर्ति | भर्मृती इति |
| १६०३ | ४ | अुर्लंऽद्वेवम् | अुर्लंऽद्वेवम् |
| १६०३ | ७ | तमिान्द्राधि° | तमिन्द्राधि° |
| ,, | १७ | इन्द्रा° | इन्द्रा° |
| १६१२ | १६ | इति | इति |
| ,, | ,, | चन्द्रेर्ण | चन्द्रेर्ण |
| १६२५ | १७ | सुऽप्रजाम् | सुऽप्रजाम् |
| १६३२ | ८ | भवत | भवतु |
| १६६१ | ८ | महत्व | महत्वः |

